

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -3

Bk. Demin 2000

# Why Propagation of Samskrit and How ?

## Putting up posters

Posters of Samskrit sayings on objects of daily use may be put up at different places at home. This will enable the visitors to pick up Samskrit words of daily use and develop confidence in communicating through Samskrit.

## Arranging competitions in Samskrit

There may be many students of samskrit living close to your house. They may be learning about Samskrit or the language itself. You can arrange competitions among such students such as elocution competitions, recitation competition or debates in Samskrit. This merely gives fillip to Samskrit learning. These students will develop fascination for Samskrit. They in turn may encourage their friends to learn Samskrit. This will lead to propagation of Samskrit with greater enthusiasm.

## Offer of gifts

You can offer gifts of Samskrit books on birth-days, marriages and such other occasions. Those who receive the gifts will benefit out of them.

**Note:**
The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.



ॐ

जयतु संस्कृतम् - जयतु मनुकुलम्

# संस्कृतभारती

## Samskrita Bhāratī

## पत्रालयद्वारा संस्कृतम्

**Samskrit Through Correspondence**
'Aksharam' 8th cross, Girinagar II Phase,
Bangalore-560 085. Ph.: 6721052

परिचयः - PARICHAYA

**तृतीयः पाठः - THIRD LESSON**

**"नियतो यत्र धर्मो वै तमशङ्कः समाचर"**

Where 'Dharma' is certain, do it without hesitation.

*-Mahabharata*

### १. विभक्तिपरिचयः

**तृतीयाविभक्तिः - Instrumental Case**

Instrumental case - meaning 'by' or 'with' (instrument of action.) Ex. हलेन - by, with plough.

| | पुंलिङ्गः | स्त्रीलिङ्गः | नपुंसकलिङ्गः |
|---|---|---|---|
| अकारान्तः- | रामेण - रामैः | - - | ज्ञानेन - ज्ञानैः |
| आकारान्तः | - - | रमया - रमाभिः | - - |
| इकारान्तः- | हरिणा-हरिभिः | मत्या - मतिभिः | दध्ना-दधिभिः |
| ईकारान्तः- | - - | नद्या - नदीभिः | - - |
| उकारान्तः- | गुरुणा - गुरुभिः | धेन्वा - धेनुभिः | मधुना - मधुभिः |

## आत्मनेपदम्

| | वर्तमानकालः | | भूतकालः | |
|---|---|---|---|---|
| | ए.व. | ब.व. | ए.व. | ब.व. |
| प्र.पु. | **वन्दते** | **वन्दन्ते** | **अवन्दत** | **अवन्दन्त** |
| म.पु. | **वन्दसे** | **वन्दध्वे** | **अवन्दथाः** | **अवन्दध्वम्** |
| उ.पु. | **वन्दे** | **वन्दामहे** | **अवन्दे** | **अवन्दामहि** |

**Sentences with words in the Instrumental case-**

१. कृषीवलः **हलेन** कर्षति ।
२. भक्तः **अञ्जलिना**[1] वन्दते ।
३. त्वं **करेण** स्पृशसि ।
४. अहं **परशुना**[2] खण्डयामि ।
५. वयं **नेत्राभ्यां** पश्यामः ।
६. अतिथयः **भोजनेन** मोदन्ते ।
७. खगाः[3] **पक्षैः** डयन्ते[4] ।
८. वयं **कुसुमैः** पूजयामः ।
९. सर्पः **दन्तैः** दशति ।
१०. माला **पुष्पैः** भवति ।
११. हारः **मणिभिः** भवति ।
१२. वस्त्रं **तन्तुभिः**[5] भवति ।
१३. भीमः **गदया** ताडयति ।
१४. जननी **अङ्गुल्या**[6] तर्जयति ।
१५. रात्रिः **चन्द्रिकया**[7] शोभते ।
१६. गुरवः **लेखन्या** अलिखन् ।
१७. अग्निः **ज्वालया** प्रकाशते ।
१८. त्वं **रसनया**[8] आस्वदसे[9] ।
१९. अहं **नासिकया** जिघ्रामि[10] ।
२०. त्वं **विद्यया** जीवसि ।
२१. उत्तरदेशः **नदीभिः** विराजते ।





२२. **मालाभिः** देवम् अलङ्करोमि ।
२३. स्त्रियः **शिशुभिः** सह अक्रीडन् ।
२४. विद्यार्थिन्यः **गुरुभिः** सह अभाषन्त ।
२५. यजमानः **अतिथिभिः** सह उपविशति ।
२६. गुरुः **छात्रैः** साकम् अगच्छत् ।
२७. सीता **रामेण** सार्धं विहरति ।
२८. कृष्णः **मया** साकम् आगतवान् ।
२९. वयं **मित्रैः** सह सम्भाषामहे ।
३०. **रामेण** सह लक्ष्मणः अरण्यं गतवान् ।

**Some rules pertaining to the Instrumental Case :**

1. The answer to the question 'by (with) what?' pertaining to the verb, will be in the Instrumental case. Ex. कर्षति - (he) tills; केन ? - with what ? हलेन - with the plough.
2. सह, साकम्, सार्धम् - these words mean 'along with' or 'together with.' The answer to the question 'together with whom?' or 'along with what?' will be in the instrumental case. Ex. अक्रीडन् - (they) played; कैः सह? - with whom? शिशुभिः सह - with children.

### प्रश्नाः

अ) Answer the following -

१. भक्तः केन वन्दते ? २. त्वं कया आस्वादसे ?
३. अहं केन स्पृशामि ? ४. माला कैः भवति ?
५. सर्पः कैः दशति ? ६. सीता केन सार्धं विहरति ?
७. का चन्द्रिकया शोभते ? ८. वस्त्रं कैः भवति ?
९. उत्तरदेशः काभिः विराजते ? १०. यजमानः कैः सह उपविशति ?

---

1. With folded hands, 2. With the axe, 3. Birds, 4. Fly, 5. With threads, 6. With finger, 7. With moonlight, 8. With the tongue, 9. (you) taste, 10. (I) smell.

आ) Construct sentences, after converting the following words in the Nominative case into the Instrumental case.

Eg- स्तुतिः - स्तुत्या, कृष्णः स्तुत्या आनन्दति ।

१. धनम्, २. जनकः, ३. काष्ठम्, ४. दया, ५. वायुः, ६. मोदकम्, ७. श्रमः, ८. दण्डः, ९. लेखनी, १०. पादः.

इ) Translate into Samskrit -

1. I touch with the hand.
2. The horse runs with legs.
3. Study with devotion.[1]
4. Farmers are delighted[2] by the rain.[3]
5. The boy bites with (his) teeth.
6. Bad persons rebuke with foul words.[4]
7. I went along with (my) elder brother.
8. The town looks beautiful[5] with shops.[6]
9. Be seated with the guests.
10. You become clean[7] by bath.

## २. चाटुश्लोकः - ३

You know that Siva looks like a beggar. He must maintain his family through begging only. Parvati feels dejected by this profession of her husband. Once she is said to have remarked :-

रामाद्याचय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलं
प्रेतेशान्महिषं तवास्ति वृषभः फालं त्रिशूलं तव ।
शक्ताहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे
खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ॥

---

१. श्रद्धा, २. नन्दन्ति, ३. वृष्टिः, ४. दुष्टवाक्यम्, ५. शोभते, ६. आपणः, ७. शुध्यति





"Beg a piece of land from Parasurama (who has won the entire earth). Ask Kubera (your friend) for seeds and Balarama for the plough. Get his bison from Yama. You have, however a bull of your own. Your trident will serve for the iron piece in the plough. I am able to bring you the food. Shanmukha will take the cattle for grazing. Take up farming. I am fed up with your begging." May these words of Gauri protect you.

## ३. समस्या - ३

आगतः पाण्डवाः सर्वे दुर्योधनसमीहया ।
तस्मै गां सुवर्णं च रत्नानि विविधानि च ॥

It appears that the meaning of this verse is incomplete, because it has no verb. The meaning as it can be taken as : All Pandavas. Comes, aspiring for Duryodhana. To him.... the cow, gold and various jewels. Findout the verb and try to complete the sense.

(Compare with the answer at the end of the lesson.)

## ४. सुभाषितम्
## (३)

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ॥

What is stated by cores of volumes, I shall present by half a stanza - 'Doing good to others is for merit and causing pain to others is for sin.'

There may be hundreds, why hundreds? thousands of books of philosophy or Religion (to instruct truth and righteousness). But import of all these is - 'Doing good to others leads to merit and causing pain to others leads to demerit.' The diction, the example,

the declination of character, etc., though different from text to text, the quintessence is same.

**(4)**

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ॥

With each drop of water the pitcher gradually gets filled. Similarly knowledge, merit and wealth are acquired. A drop (of water) may be very small quantity, but only these drops fill the pot. We must not forget this. We shall bear this in mind whenever we gain knowledge, do meritorious act and earn money. No knowledge is inferior (or less). No meritorious deed is futile and no pie goes waste.

## ५. पदसङ्ग्रहः

मिल् - to get

१. मिलति, २. मिल्यते, ३. मेलिष्यति

४. मेलितव्यम्-मेलनीयम्, ५. मिलितः-मिलिता-मिलितम्, ६. मिलितवान्-मिलितवती, ७. मिलन्-मिलन्ती, ८. मिलित्वा-सम्मिल्य ९. मेलितुम् ।

धाव् - to run, to wash.

१. धावति, २. धाव्यते, ३. धाविष्यति

४. धावितव्यम्-धावनीयम्, ५. धावितः-धाविता-धावितम् (run), धौतः-धौता-धौतम् (wash). ६.धावितवान्-धावितवती-धौतवान्-धौतवती, ७.धावन्-धावन्ती, ८. धावित्वा-धौत्वा-प्रधाव्य, ९. धावितुम् ।

नन्द् - to rejoice, to be delighted

१. नन्दति, २. नन्द्यते, ३. नन्दिष्यति

४. नन्दितव्यम्-नन्दनीयम्, ५. नन्दितः-नन्दिता-नन्दितम्, ६. नन्दितवान्-नन्दितवती, ७. नन्दन्-नन्दन्ती, ८. नन्दित्वा-अभिनन्द्य, ९. नन्दितुम् ।





स्मृ - to remember

१. स्मरति, २. स्मर्यते, ३. स्मरिष्यति

४. स्मर्तव्यम्-स्मरणीयम्, ५. स्मृतः-स्मृता-स्मृतम्, ६. स्मृतवान्-स्मृतवती, ७. स्मरन्-स्मरन्ती, ८. स्मृत्वा-संस्मृत्य, ९. स्मर्तुम् ।

रक्ष - to protect

१. रक्षति, २. रक्ष्यते, ३. रक्षिष्यति

४. रक्षितव्यम्-रक्षणीयम्, ५. रक्षितः-रक्षिता-रक्षितम्, ६. रक्षितवान्-रक्षितवती, ७. रक्षन्-रक्षन्ती, ८. रक्षित्वा-संरक्ष्य, ९. रक्षितुम् ।

तृप् - to be gratified

१. तृप्यति, २. तृप्यते, ३. तर्पिष्यति-तप्स्यति

४. तर्पितव्यम्-तर्पणीयम्, ५. तृप्तः-तृप्ता-तृप्तम्, ६. तृप्तवान्-तृप्तवती, ७. तृप्यन्-तृप्यन्ती, ८. तर्पित्वा, तृप्त्वा-सन्तृप्य, ९. तर्पितुम् ।

**Learn the correct meanings of the above and try to form sentences with them. Let the sentences be short.**

## ६. काव्यकथा

### नन्दिन्याः वरप्रसादः

सिंहः पुनः अवदत् - "नृप! तव भूतदया योग्या । किन्तु त्वं शरीरं त्यक्तुम् इच्छसि । तेन एका धेनुः रक्षिता भवति । यदि जीवसि, सर्वाः प्रजाः रक्षिताः भवन्ति । 'आचार्यस्य एका एव धेनुः अस्ति । सा मृता भवति चेत् आचार्यः कुपितः भवति' इति चिन्ता न कर्तव्या । आचार्याय कोटिशः धेनुदानं कुरु" इति ।

दिलीपः सिंहस्य वाक्यं श्रुत्वा- "यदि अहं धेनुरक्षणं न करोमि तर्हि मम जीवनम् एव व्यर्थम् । त्वम् अपि पराधीनः खलु ? त्वं वृक्षस्य रक्षणं करोषि । यदि वृक्षः नष्टः भवति तर्हि ईश्वरं कथं पश्यसि ? अतः अहं मम शरीरं ददामि । आचार्यस्य धेनुं त्यज" इति अकथयत् ।

सिंहः नृपस्य प्रार्थनाम् अङ्गीकृतवान् । नृपः मुखम् अधोभागे अकरोत् । प्राणान् त्यक्तुं सिद्धः अभवत् । तत्क्षणे पुष्पवृष्टिः अभवत् । ''वत्स, उत्तिष्ठ'' इति ध्वनिः श्रुतः । दिलीपः अपश्यत् । सिंहः नास्ति ! केवलं नन्दिनी ।

नन्दिनी नृपं दृष्ट्वा- 'मया परीक्षा कृता । सर्वं मम माया । तव सेवया अहं प्रसन्ना । वरं ददामि । पृच्छ' इति अकथयत् । दिलीपः- 'मम सन्तानः भवतु' इति प्रार्थनां कृतवान् । नन्दिनी वरं दत्तवती । 'मम क्षीरं पिब' इति उक्तवती । नृपः क्षीरं पीतवान् ।

अपरस्मिन् दिने नृपः सुदक्षिणा च राजधानीम् आगतौ । कालः अतीतः । सुदक्षिणा गर्भवती अभवत् । शुभमुहूर्ते पुत्रं प्रसूतवती । नृपः पुत्रस्य 'रघुः' इति नामधेयं कृतवान् ।

## Nandini Grants the Boon

The lion said again - "O king! Your compassion towards beings is worthy of you. But you are giving up your body. A single cow is saved by it. If you live, all the subjects are protected. Do not think thus: 'Vasishtha has only one cow. If it is killed, Vasishtha will get angry.' You can give crores of cows to Vasishtha."

Dilipa heard the speech of the lion and said: "If I cannot save the cow, my life itself is in vague. You are also a dependent. You are looking after the tree. If the tree is destroyed, how can you stand before Ishvara? Hence, I am offering my body. Leave the cow of Vasishtha."

The lion accepted the king's request. The king, bending down his face, got ready to give up his life. At that moment, there was





the shower of flowers. There arose the voice: "Son! rise up." Dilipa looked up. There was no lion, Nandini alone was there.

Nandini saw the king and said: "I tested You. All that was my magical show. I am pleased with your service. I shall grant the boon. You can ask." Dilipa made the appeal: "May I get children." Nandini granted the boon. She said: "Drink my milk." The king drank her milk.

The next day the king and Sudakshina came to the capital. Time passed. Sudakshina became pregnant. At the auspicious time, she gave birth to a son. The king named him as Raghu.

१. वसिष्ठस्य कोपपरिहारः कथं भवति ?

२. दिलीपः कं वरं पृष्टवान् ?

३. आचार्यस्य कति धेनवः सन्ति ? (कति = How many?)

४. नृपः यदि जीवति तर्हि के रक्षिताः भवन्ति ?

### ७. अन्वयक्रमः

तयोर्जगृहतुः पादान् राजा राज्ञी च मागधी ।
तौ गुरुर्गुरुपत्नी च प्रीत्या प्रतिननन्दतुः ॥ ४ ॥

**पदविभागः**

तयोः, जगृहतुः, पादान्, राजा, राज्ञी, च, मागधी, तौ, गुरुः, गुरुपत्नी, च, प्रीत्या, प्रतिननन्दतुः ॥

**अन्वयः**

मागधी राज्ञी राजा च तयोः पादान् जगृहतुः । गुरुः गुरुपत्नी च तौ प्रीत्या प्रतिननन्दतुः ॥

**अन्वयार्थः**

मागधी = the daughter of the king of Magadhas; राज्ञी = the queen Sudakshinadevi; च = and; राजा = the king Dilipa; तयोः = of the hermits Vasishtha and Arundhati; पादान् = the feet; जगृहतुः = held (bowed); गुरुः = the preceptor Vasishtha; च = and; गुरुपत्नी the wife of the preceptor; प्रीत्या = affectionately; प्रतिननन्दतुः = blessed (in return).

**तात्पर्यम्**

Sudakshinadevi was the daughter of the king of Magadhas. She was the chief queen of the king Dilipa. Both she and the king bowed down at the feet of Arundhati and Vasishtha. Vasishtha was the family preceptor; and Arundhati was his wife. Pleased with the gesture of the queen and the king, the couple moved by the emotion blessed them.

**तमातिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् ।**
**पप्रच्छ कुशलं राज्ये राज्याश्रममुनिं मुनिः ॥ ५ ॥**

**पदविभागः**

तम्, आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्, पप्रच्छ, कुशलम्, राज्ये, राज्याश्रममुनिम् , मुनिः ॥

**अन्वयः**

आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम्, राज्याश्रममुनिम्, तम्, मुनिः, राज्ये, कुशलं पप्रच्छ ॥

**अन्वयार्थः**

आतिथ्यक्रियाशान्तरथक्षोभपरिश्रमम् = (Who had) the fatigue (that was) caused by the jolts of the chariot was removed by the hospitality; राज्याश्रममुनिम् = who was like an ascetic in the hermitage of the





kingdom; तम् = that Dilipa (addressing whom) मुनिः = the sage Vasishtha; राज्ये = as regards the kingdom; कुशलम् = the welfare (well being); पप्रच्छ = asked.

**तात्पर्यम्**

Dilipa was a royal sage. To him the kingdom was a hermitage. The hospitality shown to him was befitting the royal sage. Because of this the fatigue of long journey had disappeared. Afterwords the sage Vasishtha enquired the king about the well-being of the kingdom.

## ८. अनुवादपद्धतिः

Hereafter, in this series of lessons, the method of simple translation is taught.

Translation is rendering of thought of one language into another. If you are proficient in this art, you should be able to express your ideas properly in a language you are learning. The number of possible errors also will be low.

Translation is of two types - 1. Sense for sense transalation (भावानुवाद). 2. Literal translation or word to word translation (शब्दानुवाद). We must aim at Bhāvānuvāda. This requires special equipment. Bhāvānuvāda can be mastered only when you have control over the language. The secret of this translation lies in employing a flowing style of words of that language, which has its own laws. Literal translation is a stepping stone to it. It is more

useful in the beginning (during the initial stages). But one must remember that this is not the sole meaning or the principal meaning. Even though it consists of giving the meaning of each word, it is not word to word translation also.

This can be illustrated in the following examples.

| | |
|---|---|
| Does worship | - पूजां करोति । |
| Climbs the tree | - वृक्षम् आरोहति । |
| Reads the book | - ग्रन्थं पठति । |
| Writes the story | - कथां लिखति । |
| Eats the plantain | - कदलीफलं खादति । |
| Bring the pen | - लेखनीम् आनयतु । |

Try to collect similar sentences and mail with the answer paper for this lesson.

### ९. सङ्ग्राह्यविषयाः

१. पञ्च कन्याः - अहल्या, द्रौपदी, सीता, तारा, मण्डोदरी ।

२. पञ्च पाण्डवाः - युधिष्ठिरः, भीमः, अर्जुनः, नकुलः, सहदेवः ।

३. पञ्च भूतानि - पृथिवी, आपः, तेजः, वायुः, आकाशः ।

४. पञ्च अङ्गानि - तिथिः, वासरः, नक्षत्रम्, योगः, करणम् ।

५. पञ्च बाणाः - अरविन्दम्, अशोकम्, चूतम्, नवमल्लिका, नीलोत्पलम् ।

६. पञ्च यज्ञाः - देवयज्ञः, पितृयज्ञः, भूतयज्ञः, मनुष्ययज्ञः, ब्रह्मयज्ञः ।

७. पञ्च उपचाराः - गन्धः, पुष्पम्, धूपः, दीपः, नैवेद्यम् ।





**Solution to the समस्या**

सर्वे दुर्योधनसमीहया - here split the words as सर्वे अदुः यः धनसमीहया ।

To him (तस्मै) who (यः) came (आगतः) with the desire for money (धनसमीहया), all the Pandavas (सर्वे पाण्डवाः) gave (अदुः) the cow (गाम्) and (च) the gold (सुवर्णम्) and (च) various jewels. (विविधानि रत्नानि ।)

Here अदुः, the verb concealed in सर्वे अदुः सर्वेऽदुः was the basis of the समस्या ।



ॐ

# संस्कृत भारती

## पत्रालयद्वारा संस्कृतम्

## परिचयः

## तृतीयः पाठः

**Third Lesson**

## प्रश्नाः

1. Write the Padavibhaga, Anvayartha and substance of the following verses.

a) अद्य राजास्मि गोविन्द पृथिव्यां भ्रातृभिः सह ।
त्वया नाथेन वीरेण विदुषा परिपालितः ॥
(विदुषा - by the wise one)

b) तुलस्यां सकला देवा वसन्ति सततं यतः ।
अतस्तामर्चयेल्लोके सर्वान् देवान् समर्चयन् ॥

(समर्चयन् - worshipping अर्चयेत् - should be worshipped
तुलस्यां - in Tulasi)

2. Give the Krudanta forms of स्मृ and write two sentences using each of them (24 sentences).

परि (इं) -III, नवें-९८, १०००

## Treasure of knowledge in Ancient India

### Nārāyaṇasūktam

This is a part of Ṛgveda. The anatomy of the body is explained here. The blood circulation, the function of the heart in maintaining it, the shape of the heart, composition and other functions are explained here. The lower part of the heart is described as the appearence of a fading lotus. It is said that the heart exists six inches above the naval below the line of the neck. One half of the heart carries pure blood and the other half, impure blood. The veins which carry impure blood get purified and circulate it all over the body through the valves. The throbs are the result of this process. One can find this unknown description in this sukta.

### Atreyam

This is a therapeutic science. Ayurveda has two parts prognosis and therapy. Different kinds of surgery and surgical instruments are detailed here.

### Painting

The propounder of this science is the sage Bhima. The art relating to skillful mixture of paints and the art of photography are described here. The art of Photography existed in India thousands of years ago.

